# "देवबन्दी वरदराजः"

डाक्टर, वे. राघवः

अमृतवाण्यां मुद्राप्य
प्रकाशितः
१९४८

वि. वि. सुब्बय्या अण्ड सन्स प्रिंटर्स, बेंगलोर,
इत्येतैः मुद्रितः

## "VARADARAJA, THE TEMPLE MINSTREL"

The short story poem presented here has for its subject Varam-tarum-perumal Arayar or Varadaraja, a sacred minstrel of God Ranganatha's shrine at Srirangam. The late Srirangachariar, Bhagavatar, of Chidambaram, narrated the story to me and the spell of the appeal which the Bhagavatar's narration produced never left me, even after I finished composing these lines on the salvation of the fallen Brahman minstrel.

Varadaraja of Srirangam, one of the Arayars who sing psalms and render them in gesture and adore the Lord with their arts, went for his usual bath to the Cauvery early in the morning. There, on the river bed, he saw a Harijan maiden, employed in cutting and serving grass to the temple elephant, washing the grass in the water. Falling in love with her, Varada went away with her; gaining no access even in her hamlet, he built his own hut in a secluded *tope* on the river, and lived his life in her company.

Years rolled by; it was an evening, the full-moon day in the month of Chaitra, a festival was on, and a processional deity of God Ranganatha's temple had been brought and established in a shamiana on the sands of the Cauvery. The sounds of the sacred service that fell on the ears of Varada sitting at a distance in the midst of his Harijan family touched his soul; he got into a trance as it were.

Meantime God had expressed himself through the divine afflatus that came upon a priest, that he wanted back Varadaraja and longed for his strains and gestures. A messenger went forth tand brough Varada, flowing with tears and bemoaning his long separation from the Lord's presence. At God's bidding, Varada sang and danced; as God was being taken back into the city, Varada was commanded to go in advance, singing and dancing; but when the city-limit was reached, Varada tarried a while, unwilling to take his fallen self into the sacred temple town; suddenly his mortal frame fell; like a mass of lightning, his effulgent spirit flashed forth and became one with the Lord.

The details of the story vary somewhat in the account of this Arayar found in the *Koyilolulu*, reference to which was kindly supplied by my friend Sri S. Partha. sarathi Ayyangar, Siromani, of Srirangam (see pp-108-9, pt. I, Ananda Press edition). The poem here presents the version which my imagination received from the late Bhagavatar.

V. R.

# "देवबन्दी वरदराजः"

### डाक्टर् वे. राघवः

१

[2]कनकाख्यां विवृण्वानाः कावेर्याः स्तिमिताम्भसि ।
बभुः प्रसृमरा उद्यदर्कसौवर्णभक्तयः ॥१॥

नाद्यापि वारुणीप्रान्तविलम्बिम्लानमण्डलः ।
आमृष्टनीलिमापाण्डुरस्तं यातस्सुधाकरः ॥२॥

मूर्च्छन्नानाद्रुमालापरागमालाभिपूरितम् ।
अभादुद्भूषितं तत्र तरुषण्डं नदीतटे ॥३॥

कूलद्वयेऽपि पुलिनैः भुजङ्गकुटिलाञ्चिताम् ।
वहमानां पयोवेणीं चोललक्ष्मीं कवेरजाम ॥४॥

समागच्छद्यथापूर्वं श्रीरङ्गेश्वरमागधः ।
आर्यो वरदराजाख्यः श्रीमानभिववोन्मुखः ॥५॥ (युग्मम्)

पद्मकोशान्तराबद्धभृङ्गस्वनमन्द्रमञ्जुलम् ।
उपगीतहरिस्तोत्रवदनस्स समागमत् ॥६॥

[3]विदारकं विशालं स पुलिनाभोगसीमनि ।
विरचय्य, प्रसक्तेऽथ तस्मिन् वासोऽभिमज्जितम् ॥७॥

भुग्नजानु ततो नैजनेजनोपलपार्श्वतः ।
उपविश्य समारेभे प्रक्षालयितुमंशुकम् ॥८॥ (युग्मम्)

---

1. Bandi, Magadha, Bharata, Dancer and Minstrel, Arayar in Tamil
2. Kanaka-the Cauvery after its Tamil name Ponni.
3. Vidaraka-a spring dug out in sand ; called Urru in Tamil;
   कूपकास्तु विदारकाः Amara, I.10.10.
4. The stone on which he used to wash his clothes daily.

मन्द्रतारक्रमोदारः स च धावंनजो ध्वनिः ।
अपतत् तालबन्धेन गायतस्तस्य बन्दिनः ॥९॥
तदा तस्य पुरः कोऽपि नीरे शलशलध्वनिः ।
वक्त्रमुन्नमयामास दृशोरावर्जयन्युगम् ॥१०॥
आर्द्रघनपयोभारस्वद्वराद्ध नूतनाम् ।
अपर्याप्तपटोन्मुक्तजृम्भमाणपयोधराम् ॥११॥
कृत्तघासमृदुत्क्षालत्यागिनीं करवल्लरीम् ।
पुरः पुमांसमालोक्य न्यग्रयन्तीमुरस्स्थले ॥१२॥
दृष्ट्वा सपदि तां श्यामां वरदस्तरलान्तरः ।
प्रांशुर्विक्रान्तगामी स ब्राह्मणस्तत्त्वविद्धवात् ॥१३॥ (विशेषकम्)
बभौ न देवभरतः भावो देहीव सुन्दरः ।
अङ्गहारमनोहारी जगामाभिनयन्निव ॥१४॥
तस्याः प्रस्पन्दमानायाः क्षुब्धानतविवर्तितम् ।
वक्त्राम्बुजमवालोक्य बभाषे विह्वलो द्विजः ॥१५॥
"मत्तकाशिनि मत्ताक्षि मादितोऽस्मि तव श्रिया ।
माम्यहं नैव मे देहे हन्त निःशरणोऽस्म्यहम् ॥१६॥
का त्वं पयोधरस्फूर्तिमुकुटायितसौष्ठवे ।
आविष्टं त्वयि मच्चित्तं समेहि वरयस्व माम्" ॥१७॥
इति तत्श्लक्ष्णजल्पं सा श्रुत्वाधिकविसंस्थुला ।
न श्रद्धातुं क्षमा तं तु द्विजं स्तब्धमुखं स्थिता ॥१८॥
स्वाङ्गनिध्यानलयितस्तिमिताक्षं स्थितं पुरः ।
किञ्चित्कालात्कथंचित्सा प्राभवद्वक्तुमग्रजम् ॥१९॥

---

5. Washing the mud off the grass that had just been cut.
6. Mukutayita, Muktayi in popular musical parlance, means "the crowning effect."

"आर्य ब्रह्मास्मि-का वाहं जघन्या बत पुक्कशी।
भीतास्मि-नैव शक्नोमि वक्तुम्-किन्त्वङ्ग भाषसे ॥२०॥
'देवालयगजग्रासघासच्छेत्र्यस्मि पुक्कशी।
पानाय भवतां ब्रह्मन् उपसर्पोऽपि नो ध्रुवम्" ॥२१॥

इत्यवोचद् द्विजं कन्या विकृतं प्राकृतं वचः।
द्विजस्तु तस्यास्तद्धन्न काकलीति हि मन्यति ॥२२॥
ततस्तु तप्तसौवर्णस्तंभदीप्रतनौ द्विजे।
निर्बन्धप्रार्थने तस्मिन् सापि मज्ञातकामना ॥२३॥
बबन्ध भावं स्मेराक्षी रज्यल्लुलितलोचना।
पराशरसमस्सोऽपि तां जग्राह कराम्बुजे ॥२४॥ (युग्मम्)

२

श्रीरङ्गनाथं निकषा द्विजो यो
बभूव नित्यं बत सेवमानः।
स वन्दिवर्यो वरदोऽधुनागात्
तां वर्णबाह्यामनुसेवमानः ॥१॥
पातित्यवाच्योन्मुखरेऽग्रहारे
वासः कथन्त्वन्त्यजयागतस्य।
तयैव गत्वा स पुरान्तसीम
तत्पक्कणं प्राविशदग्रजन्मा ॥२॥
स्वकामुपेतामवलोक्य तादृक्
सनाथितां ब्राह्मणपुङ्गवेन।
स चाप्यभून्नीचजनाधिवासः
समाकुलो विस्मयतः क्षणेन ॥३॥

---

7. One who cuts grass fodder for the temple elephant.

प्रक्षोभिताः केचन केऽपि तस्थुः
तत्पक्कणे व्यादितमूकवक्त्राः ।
केचिन्निनिन्दुस्तरुणीं कुचेष्टां
कुलापदं केचन विम्यति स्म ॥४॥

निन्दातिवादैर्विविधैश्च केचिद्
युवान आसन् द्विजताडनोत्काः ।
भ्रान्तोऽप्यधावत् कुकवाकुवर्गः
श्वानोऽप्यबुक्कन् द्विजदर्शनोग्राः ॥५॥

वृद्धास्तु केचिद् द्विजपादपात-
मूचुर्द्विजं साञ्जलि दीनवाचः ।
"स्वामिन् कथन्त्वीदृगनौचिती ते
श्रीरङ्गनाथान्तिकमागतस्य ॥६॥

कथन्न्वसौ पुक्कसकन्यकी नः
त्वां वञ्चयामास सुशीलविद्यम् ।
कथं स रङ्गेशयदेवदेवः
त्वया प्रमादात् परिवञ्च्यतेऽद्य ॥७॥

'द्विजप्रवेशो बत पक्कणो नो
विनश्यती'त्युक्तिरतोऽन्नपातः ।
अपेहि कुत्राप्यनये" त्युदीर्य
वासं तयोर्नैव ददुस्स्वमध्ये ॥८॥ (विशेषकम्)

३

पक्कणेऽपि निषिद्धस्स तया मातङ्गकान्तया ।
गार्हस्थ्यमकरोत्प्रेम्णा कुत्राप्येकान्तमेयिवान् ॥१॥

मत्तकोकिलसंघुष्टे भृङ्गीसङ्गीतपूरिते ।
कवेरजातटीवृक्षषण्डे चक्रे कुटीं शुभाम् ॥२॥
कुटीं तामभितस्तत्र फुल्लपुष्पौघसौरभम् ।
तत्तयोः प्रेम चाव्याजं सुरभीचक्रतुस्तराम् ॥३॥
सन्न्यस्तसर्वबन्धेन पूर्णमस्तान्यवृत्तिना ।
भावोद्रेकप्रपन्नेन तेन योगः किमाश्रितः ॥४॥
क्रीडावल्गन्निजापत्यचक्रोन्नादितसीमनि ।
स्वाश्रमे स बहिर्वेदीमध्यासीनः कदाचन ॥५॥
येन पूर्वं प्रभोः पार्श्वे गीतीस्तत्कीर्तिवर्धनीः
अगायत्सरसं तेन वक्त्रेण दयितां निजाम् ॥६॥
सह्यजासुभगस्पन्दिमन्दानिलनिषेवितः ।
लालयन्नास मधुरैर्लापैश्चातुरीचणैः ॥७॥ (विशेषकम्)
सन्ध्यासमेतस्सूर्योऽपि गन्तुमस्ताद्रिमुत्सुकः ।
प्रतिगृह्णन् द्विजार्घ्यांनु व्यलम्बत तदा दिवि ॥८॥
झटित्याकुलकान्ताक्षितरलालोकितं मुखम् ।
अन्तःशून्यत्वपिशुनं तस्य निस्स्पन्दतामगात् ॥९॥
प्रशान्तसायंसमयसमीरप्लवमानया ।
तदा कयाचिद्गम्भीरशङ्खश्रुत्या स मागधः ॥१०॥
स्पृष्टः प्रमार्जितस्वान्तो हृष्टरोमास्रलोचनः ।
मीलदक्षश्चिरं तस्थौ कुतोऽपि ध्यानमास्थितः ॥११॥ (युग्मकम्)
ततस्तस्य समाधिं तं भेदयन् कोऽपि तत्पुरः ।
"स्वामिन् वरद धन्योऽसि देवस्त्वामाह्वयत्यहो ॥१२॥
उत्तिष्ठतु भवान् शीघ्रमाज्ञा रङ्गेशयेशितुः ।
प्रतिष्ठस्व, नयामि त्वां देवदेवस्य सन्निधिम्" ॥१३॥ (युग्मकम्)

इत्युक्त्वा वरदाचार्यं तं बन्दिचरमीशितुः ।
समाधाविव गच्छन्तं प्रभोरग्रं समानयत् ॥१४॥

अहो तत्र पुरस्सह्यतनयापुलिने शुभे ।
मनोज्ञमण्टपान्तस्स्थं दीप्रमुत्सवशोभिनं ॥१५॥

वरदो वरदं विष्णुं स्वात्मसर्वप्रभुं परम् ।
स्मेरसुन्दरवक्त्राब्जं कारुण्यतुमुलेक्षणम् ॥१६॥

तदीयदासदासालिस्तुतिवर्धितवैभवम् ।
भूलोककलशाम्भोधिक्षेत्रनाथं नदीतटे ॥१७॥

रङ्गे स्वपन्तमप्युर्वीरक्षणोन्निद्रवीक्षणम् ।
विरोधपरिहारं तं सामरस्यपरावधिम् ॥१८॥

विभुं विलोकयन् यावद् अन्तरानन्दमज्जडः ।
स्थितस्स वरदस्तावद् आज्ञाभूद्देवदेवतः ॥१९॥ (कुलकम्)

अवदद् वरदो दीनः पश्चात्तापोरुतापितः ।
"स्वामिन् भोः पतितोऽस्म्येष कथमस्त्यर्हणा मम ॥२०॥

नीचाधरसमायोगदूषितं वदनं मम ।
कथं धैर्यं विभो तस्य पावनस्तवने तव" ॥२१॥ (युग्मकम्)

इत्यविच्छिन्नबाष्पाम्बुसंरोधकलकन्धरम् ।
विलपन्तं पुनश्चापि गातुमाज्ञापयद् विभुः ॥२२॥

---

8. For the Tiruvural festival on Chitrapaurnami on the sands of the Cauvery, an Utsava Archamurti of Lord Ranganatha had been brought there.

9. The God's Command expressed itself through the Avesa that came on the Archaka.

सद्यः स्फुटं मधुरमाहतरागजात-
मत्यन्तसुष्ठु सरलोद्गलितप्रवाहम् ।
निष्यन्दिताश्रुपरिवाहिसदः स बन्दी
गीतीः समारभत देवयशोऽवतंसाः ॥२३॥

तद्गानलीनपरिषत् स च देवदेवः
तद्गानमग्न इव विस्मृतकार्यकालः ।
तत्रैव सह्यतनयासिकतासु चैत्र-
ज्योत्स्नाप्लुतास्वभवतां सुचिरं सुधाब्धौ ॥२४॥

बाष्पार्द्रदृष्टि स विलम्ब्य विलम्ब्य गीतं
विद्रावयद्गलगुणेन ततो विधाय ।
शाखांकुरातिमृदुचारुनिजेश्वरांघ्रि-
विश्लेषवस्तु च ततोऽभिनिनाय बन्दी ॥२५॥

तत उदभवदाज्ञा, भक्तवर्गो विभुं तं
नगरमभि तटिन्या मण्टपादानिनाय ।
स च वरद उदीर्णानन्दगानस्तुतेशः
पुरमभि पुर एतुं स्वामिनाज्ञापितोऽभूत् ॥२६॥

नेतुं स्वं पतितं द्विजन्मनगरं
यावत्स बन्द्युत्तमः
पुर्यास्सीम्नि जुगुप्समानमनसा
तस्थौ गृणन्नीश्वरम् ।
तावत्तस्य पपात भौतिकवपुः
सद्यो धरण्यां, क्षणाद्
देवाङ्केऽमिलदद्वयं शततटित्स्फूर्तिः
प्रभा काचन ॥२७॥

10. In this and another festival, the Arayars go in front, facing the deity in procession, singing and dancing all the way.

## By the same Author

Bhoja's Sringara Prakasa
Number of Rasas
Some Concepts of Alankara Sastra
Studies in Natya Sastra, Vol. I (to be published)

Mudrarakshasanatakakatha
Snushavijaya (with Sanskrit gloss)
Anandaranga Champu (with Sanskrit gloss)
Aryasatakavyakhya

Rasalila
Kamasuddhi
Phalguna
On the Banks of the Cauvery
Gopa Hampanna
Svarajya Ketu
'Mahatma'